

# UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES-188

मेसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला-१८८

श्री रामेश्वरमखिविरचितं

# न्यायशतकम्

# NYĀYAŚATAKA

OF

*RĀMEŚVARAMAKHI*

*General Editor*
Dr. H. P. DEVAKI, M.A., Ph.D.
Director, Oriental Research Institute, Mysore

सम्पादकः
व्याकरणालङ्कारविद्वान्
एच्. वि. नागराजराव्

*Edited by*
*Vyākaraṇālaṅkāravidwān*
H. V. NAGARAJA RAO

*ORIENTAL RESEARCH INSTITUTE, MYSORE*
प्राच्यविद्यासंशोधनालयः, मेसूरु
1998

Price : Rs. 25-00



# UNIVERSITY OF MYSORE

ORIENTAL RESEARCH INSTITUTE SERIES–188

मेसूरु विश्वविद्यानिलयः

प्राच्यविद्यासंशोधनालयग्रन्थमाला–१८८

श्री रामेश्वरमखिविरचितं

# न्यायशतकम्

# *NYĀYAŚATAKA*

OF

*RĀMEŚVARAMAKHI*

*General Editor*

Dr. H. P. DEVAKI, M.A., Ph.D

Director, Oriental Research Institute, Mysore

सम्पादकः

व्याकरणालङ्कारविद्वान्

एच्. वि. नागराजराव्

*Edited by*

*Vyākaraṇālaṅkāravidwān*

H. V. NAGARAJA RAO

*ORIENTAL RESEARCH INSTITUTE, MYSORE*

प्राच्यविद्यासंशोधनालयः, मेसूरु

1998

# FOREWORD

Sanskrit literature is an enchanting subject for both poets and philosophers. The Oriental Research Institute, Mysore, has been nourishing and nurturing Sanskrit literature by preserving and publishing rare Sanskrit manuscripts since the last century. This Institute which has already published 186 Sanskrit works, now adds another feather with the publication of 'NYĀYAŚATAKAM' (A century of maxims) written by Rāmeśwara makhi. This book is based on a single paper manuscript preserved in the Institute. Vidwan H. V. Nararaja Rao, a Senior Research Assistant and a doyen in the field of Sanskrit research, has edited the manuscript of Nyāyaśatakam and added to the richness of Sanskrit literature. He has also given brief explanation of each Nyāya in simple Sanskrit.

The term Nyāya is used in different connotations in Sanskrit literature, such as method, manner, anology, illustration, law, justice, legal proceeding by logical argument, maxim or proverbial saying etc., Nyāya is also a system of philosphy founded by the sage Gautama. V. S Apte mentions about thirteen different connotations for the term Nyāya. He also illustrates the term Nyāya in the sense of maxim or proverbial sayings quoting about twenty six Nyāyas popular in Sanskrit literature. In the view of Buehler, these maxims are the inferences from familiar utterances. In Sanskrit literature the Nyāya compilations are only a few and most of them belong to a period from the second half of nineteenth century upto the second half of twentieth century. *Laukika–Nyāya–samgraha* by Raghunāthavarma is said to be the first available work of maxims. But, *Laukika nyāyāñjali* compiled by colonel Jacob is a pioneering work written in simple Sanskrit. Jacob has collected about four hundred and eighty four maxims in *Laukika nyāyāñjali*. The same book has been rendered in English and alphabetically arrarnged by Jacob himself during 1907–1911. Jacob has compiled this work selecting the nyāyas from epics, purānas, philosopby, grammar and other branches of Sanskrit

literature. Mention may be made of other works on maxims such as Taranatha's Vācaspatyam which contains one hundred and fifty one maxims. Satyavrata Rāmāśrami's monograph contains thirty six popular maxims, Chabbinath Mishra's Nyāyokti-kośa is a compilation of maxims, published in 1978 and it is based on the Nyāyas found in philosophical works.

The *Nyāyaśatakam* (A Century of Maxims) is a metrical composition of hundred and one devotional verses addressed to Lord Shiva, composed in anuṣṭup chandas. The author has trod upon a new path using the popular Nyāyas with poetical and devotional touch up. The second half of each verse (except the opening and concluding verse) is a famous nyāya and totally there are ninty nine nyayas in Nyayaśatakam. It seems that the poet has included two nyāyas in śloka No. 76 to make it one hundred. Most of the Nyâyas referred to in *Nyāyaśatakam* display the fundamental concepts of Advaita Vedānta For instance, the author quotes the upanishadic statement "Tattvamasi" in the verse :

prāptaprāptistvamevāsi tattvamasyādi vākyataḥ ।
Kaṇṭha-cāmīkara–nyāyāt āptoktāt parameśvara ॥

The maxim Kaṇṭha-Câmikara–Nyāya of the above verse is greatly in vogue among the followers of vedānta. This simile of 'golden ornament in the neck' appears in advaita works such as ĀtmatattvaViveka and Vedānta–Paribhāshā. A person unaware of the golden ornament on his neck is searching for the same elsewhere until some one points it out. Accordingly we are not aware of the fact until instructed by a competent teacher.

Another noteworthy point in the book Nyāyaśatakam is that some of these Nyāyas although employed in the works of Alaṅkāraśāstra are illustrated in the background of Advaita philosophy, for instance, kshīra–nīra nyāya, the simile of milk and water. Writers on Alaṅkāra employ this maxim to illustrate the figure called 'Saṁkara'. Alaṅkārasarvasva and

Kuvalayānanda explain the figure 'saṁkara' as a combination of two figures by quoting the simile of milk and water. Accordingly the water mixed with milk cannot be separated. Rāmeśvaramakhi has employed the same nyāya to illustrate the inseparable blend of Jīvātma along with Brahma.

The author of Nyāyaśatakam remains silent about his personal life, date etc., throughout the work. However, he mentions his name in the concluding verse of Nyāyaśatakam.

> Rāmeśwara–makhiproktam gaurīśārpitam iṣṭadam ।
> paṭhantu Nyāya-Śatakam paṇḍitāh nyāyadarśinaḥ ॥

The word 'makhi' tagged to his name clearly denotes that he belonged to the family of traditional brahmins accustomed to the performance of rituals and sacrifices. Rameśwaramakhi is a staunch devotee of Lord Shiva and a follower of Advaita philosophy.

Vidwan H. V. Nayaraja Rao richly deserves our congratulation for his endeavour to unearth a rare work on nyāyas (Maxīms). The Vice-Chancellor of Mysore University Professor S. N. Hegde who is the source of inspiration for bringing out the very rare works of Sanskrit, richly deserves our deep gratitude. Thanks are due to the Registrar Prof. V. G. Talvar, Deputy Registrar Dr. Chandrakumar and Finance Officer Sri Mahadevaswamy. I acknowledge the sincere efforts of Mr. Siddegowda, Director, University Printing Press and other officials of the University for their helping hand in the pursuit of academic activities of the Institute.

Dr. (Mrs.) DEVAKI
*Director*
*Oriental Research Institute*
*Mysore*

*Date* : 28-7-1998

# प्रस्तावना

महदिदं प्रमोदस्थानं यत् न्यायशतकाख्योऽयं ग्रन्थः प्राच्यविद्या-संशोधनालयात् प्रकाशं नीयत इति ।

परिपूर्णशतसंवत्सरोऽयं संशोधनालयः अद्यावधि सप्ताशीत्यधिकशत-संख्याकानि (187) ग्रन्थरत्नानि प्रकाश्य इदानीं अष्टाशीत्यधिकशततमं ग्रन्थमिमं प्रकाशयतीति च प्रमोदस्थानम् ।

संशोधनालयेऽस्मिन् संशोधनविभागः, ग्रन्थालयविभागः, मैक्रोफिलं-विभागः, झराक्स्विभागः मूलमातृकासंरक्षणविभागः पुस्तकविक्रयणविभागः, इत्यादयो विभागाः वर्तन्ते ।

तत्र संशोधनविभागे एकादशसंख्याकाः विद्वांसः संशोधनकर्मणि रताः । ते च नैकविधशास्त्रेषु निपुणाः नैकविधलिपिज्ञाः ग्रन्थसम्पादनकर्मणि परिणताः वर्तन्ते । ते च विद्वांसः भारते तत्र तत्र प्रदेशेषु सञ्चर्य मूलमातृकाः सङ्गृह्णन्ति । सङ्गृहीतानां मातृकाणां राशिं सूक्ष्मपरीक्षाद्वारा विभज्य पट्टिकां कुर्वन्ति च । बहोः प्रदेशादानीतानां मूलमातृकाणां तैलादिलेपनद्वारा संरक्षणमपि अत्र क्रियते । तथा संरक्षितेषु ग्रन्थेषु मध्ये याः अप्रकटिताः समाजोपयुक्ताश्च मातृकाः विद्यन्ते ताः मातृकाः सम्पादनार्थं स्वीकृत्य पाठान्तरनिर्देशनद्वारा तथा विस्तृतप्रस्तावनालेखनद्वारा मुद्रणाय सिद्धं कुर्वन्ति पण्डिताः ।

द्वितीयः ग्रन्थालयविभागः । विभागेऽस्मिन् त्रिंशत्सहस्राधिकाः संस्कृतग्रन्थाः तथा संस्कृतसम्बन्धिनः संस्कृतेतरभाषाग्रन्थाश्च सङ्गृहीता वर्तन्ते । अपूर्वाणां ग्रन्थानां अध्येतारः ये आगमिष्यन्ति तेषां अध्ययनार्थमानु-कूल्यमत्र कल्पयते ।

तृतीयः मैक्रोफिलं विभागः । अत्र विभागे दशसहस्राधिकमूलमातृकाणां मैक्रोफिलंकरणद्वारा कृतः सङ्ग्रहो वर्तते ।

देशीयाः विदेशीयाश्च ये बुभुत्सवः अपूर्वानत्रत्यान् ग्रन्थानपेक्षन्ते तेषां झराक्स् करणद्वारा तान् प्रति प्रेषणस्य व्यवस्थाप्यत्रास्ति ।

इदानीं प्रकाशनपदवीयोग्यः न्यायशतकाख्योऽयं ग्रन्थः । ग्रन्थस्यास्य रचयिता रामेश्वरमखी । ग्रन्थनाम्नैव ज्ञायते संस्कृतभाषायां विद्यमानानां शतसंख्याकानां न्यायानामत्र सङ्ग्रहः कृत इति । अयं च कविः शिवभक्तः शिवस्तोत्रव्याजेन शतन्यायान् शतश्लोकैः प्रयुक्तवान् ॥

ग्रन्थस्यास्य सम्पादकः विद्वान् एच्. वि. नागराजराव् महोदयः। स तु व्याकरणशास्त्रे तथालङ्कारशास्त्रे अधिगतपाण्डित्यः, देशे विदेशे च स्वप्रतिभाप्रकटनपूर्वकं, नैकविधविषयानधिकृत्य पाठोपन्यासलेखनादिद्वारा प्राप्तकीर्तिश्च। स ग्रन्थस्यास्य टिप्पणीमपि रचितवान्।

संशोधनालयस्यास्येदानीन्तननिर्देशिका डा. एच्. पि. देवकीर्ति नाम्ना विख्याता। सा तु सुसंस्कृता सरला गुणग्राहिणी स्वयं विदुषी च। अत्रत्यानां पण्डितानां सम्पादनकर्मणि प्रोत्साहदायिनी च। अस्याः निर्देशनावधौ नैके ग्रन्थाः प्रकाशिताः इति च प्रमोदस्थानम्।

इदं च ग्रन्थपुष्पं सहृदयानां अध्येतॄणां हस्तं प्राप्नोतु। ते च पुष्पमिदं प्राप्य तद्गन्धेन सन्तुष्टा भवेयुरित्याशासेऽहम्।

16–7–1988
मैसूरु

इति सुधीविधेयः
न्याय–वेदान्तविद्वान्
आर्. जी. माळगी
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

# पीठिका

न्यायशतकाख्यं ग्रन्थं संस्कृताभिमानिनां विदुषां हस्तारविन्दे अर्पयितुं महान् हर्षो जायते। ग्रन्थोऽयं शिवस्तोत्ररूपः सन्नपि न्यायानां स्वरूपं बोद्धुं सहायो भवतीति वैशिष्ट्यशाली। अत एवास्य प्रकाशनेऽस्माकम् उत्साहः।

न्यायः

न्यायशब्दो बहुष्वर्थेषु प्रयुज्यते। न्यायालयो न्यायवादीत्यादि लौकिकेषु शब्देषु न्यायशब्दस्य अपराधानुगुणदण्डविधानं, Justice इति आंग्लभाषायां कथ्यमानम् अभिप्रैति जनः। न्यायशास्त्रमित्यत्र गौतमप्रणीत-सुत्राधारकं तर्कावलम्बि शास्त्रमभिप्रेयते। नीयते निर्णीयते तत्त्वमनेनेति व्युत्पत्त्या अनुमानविशेषः, तत्प्रतिपादकं प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्य-पञ्चावयवयुतं वाक्यं च न्यायशब्देनोच्यते। लोकव्यवहारे तस्य तृतीयावयवः (उदाहरणं = दृष्टान्तः) न्यायशब्देन कथ्यमानो दृश्यते। एषु अन्तिमम् अर्थं मनसि निधाय ग्रन्थकर्ता ग्रन्थस्यास्य न्यायशतकम् इति नाम कृतवान् इति भाति। एते न्याया व्यवहारे बहुत्रोपयुज्यन्ते अर्थस्पष्टीकरणार्थम्। दृष्टान्तेन खलु लोको बुबोधयिषितं बोद्धुं शक्नोति। न्यायानाम् इयत्ता नास्ति, लोक-व्यवहारस्य शब्दप्रयोगस्य च मितिरहितत्वात्। यथा यथा लोकव्यवहारो विपरिवर्तते, तथा तथा नूतना न्याया अपि भाषाव्यवहारे दृश्यन्ते। शास्त्र-कारा अपि वेदान् शास्त्राणि प्रपञ्चव्यवहारं च वीक्ष्य नूतनान् न्यायान् व्यवहारपथे आनयन्ति। एतेषां ज्ञानं लोकव्यवहारनैपुण्यं, भाषणचातुर्यं लेखनवैचक्षण्यं च जनयति। अत एतेषाम् अध्ययनम् आवश्यकम् अस्ति।

वैदेशिकः कर्नल् जि. ए. जेकब: न्यायानाम् अध्ययनम् आंग्लानुवादं च कृत्वा "लौकिकन्यायाञ्जलिः" इति भागत्रयात्मकं ग्रन्थम् अस्य शतकस्यादौ प्राकटयत्। तन्मार्गानुयायिनोऽन्येऽपि विपश्चिदपश्चिमाः स्वस्वमातृभाषा-नुवादैस्सह न्यायसंग्रहान् प्रकटितवन्तः।

केचन न्यायाः केवलं लोकव्यवहारमूला भवन्ति। यथा प्रसिद्धः कूपमण्डूकन्यायः। केचन शास्त्रप्रसिद्धिमूलाः भवन्ति। यथा कपिञ्जलाधि-करणन्यायः। केचन हास्यभरिता अपि भवन्ति। यथा तुन्दिलसुरतन्यायः।

जेकबमहाशयेन त्रिषु भागेषु संगृहीताः न्यायाः चतुरशीतिसहित-चतुश्शतसंख्याकाः। अतो न्यायानाम् एतेषां व्याप्तिर्ज्ञायते।

न्यायशतकम्

सम्प्रति प्रकत्यमानं न्यायशतकं वस्तुतः शिवस्तुतिरूपम्। अनुष्टुप्-छन्दोनिबद्धैः श्लोकैर्विरचितेयं स्तुतिः प्रतिश्लोकं न्यायम् एकम् उपयुङ्क्ते। ग्रन्थे एकोत्तरशतं श्लोकाः सन्ति। प्रथमश्लोके ग्रन्थकर्तुः प्रतिज्ञा दृश्यते। यथा—

विन्यस्य चित्तं शैलेन्द्र—
कन्याधीशपदाम्बुजे।
सन्न्यायशतकं वक्ष्ये
धन्यविद्वत्सुखावहम्॥ इति॥

अन्तिमे श्लोके स्वनामोल्लेखनपूर्वकं ग्रन्थकर्ता कृतिसमाप्तिं घोषयति। यथा—

रामेश्वरमखिप्रोक्तं
गौरीशार्पितमिष्टदम्
पठन्तु न्यायशतकं
पण्डिता न्यायदर्शिनः॥ इति॥

अनयोर्द्वयोः श्लोकयोः कोऽपि न्यायो न दृश्यते। अतः कारणात् ग्रन्थेऽस्मिन् एकोनं शतं न्यायाः सन्ति, न पूर्णं शतम् इत्यवगन्तव्यम्। एतद्ग्रन्थ-कर्तुः प्रमादेन जातं वा, लेखकप्रमादजातं वा न जानीमः।
अथवा, षट्सप्ततितमे एकस्मिन्नेव श्लोके न्यायद्वयम् उल्लिखितम् इति वक्तुं शक्यते,

शम्भो शिलाक्षरन्यायः प्रार्थ्यो मे त्वदनुग्रहे।
अन्यो जललिपिन्यायान्न तिष्ठति न दृश्यते॥

इत्यत्र शिलाक्षरजललिपिन्याययोः स्थितत्वात् शतसंख्या पूर्णेति वक्तुं युक्तम्।

ग्रन्थस्य मूलपुस्तकं त्वेकमेव लभ्यते मैसूरु प्राच्यविद्यासंशोधनालयस्य कोशागारे। अस्य विवरणमिदम्—

Descriptive Catalogue of Manuscripts, Volume VII Stotra.

| क्रमसंख्या | ग्रन्थसंख्या | लेखनवस्तु | लिपिः |
|---|---|---|---|
| 23495 | B 772 | कर्गजपत्रम् | कन्नडलिपिः |
| आकारः | पत्रसंख्या | प्रतिपत्रं | प्रतिपङ्क्ति |
| 16.59. × 5cms | 1–25 | पङ्क्तयः | अक्षराणि |
| | | 6 | 13 |

"Catalogus Catalogorum" इति ग्रन्थानुसारेण अन्यत्र क्वापि अस्योपलब्धिर्नास्ति। अतः कारणात् अत्र प्रमादात् त्रुटितः श्लोकोऽन्यत्र लभ्येतेति आशा नास्ति। तस्मादस्माभिः एकमेव मूलकोशम् आश्रित्य ग्रन्थोऽयं सम्पादितः। तत्र तत्र लेखकदोषाः अर्थानुसारेण मार्जिताः यथाशक्ति। अशुद्धो मूलकोशस्थः पाठः अधो दर्शितः। यत्र मूले अक्षराणां लोप एव अवलोकितः तत्र [ ] चिह्नान्तः अस्माभिरूहितः पाठः स्थापितः। एतद्विषये सदसद्व्यक्तिहेतवः सन्त एव प्रमाणम्। यदि रुचिरतरः पाठो विदुषां वाचकानां भाति तादृशेषु स्थलेषु, तर्हि कृपया वयं तद्विषये बोधनीया येन परस्तात् क्रियमाणे परिष्कारे दोषमार्जनं शक्येत।

मूलकोशस्य मैसूरु ग्रन्थगारे एव लभ्यत्वात्, तस्य च कन्नडलिप्यां विद्यमानत्वात्, ग्रन्थकर्ता कर्णाटदेशीयः स्यादिति अस्माभिरूह्यते। अपि च मूलकोशो न तालपत्रे लब्धः अपि तु कागजपत्रे इति हेतोः ग्रन्थो नातिप्राचीन इत्यपि तर्कयामः।

## ग्रन्थकर्ता

अन्तिमश्लोकोक्तदिशा ग्रन्थस्यास्य कर्ता रामेश्वरमखीति ज्ञायते। किन्तु कोऽसौ रामेश्वरमखी? किमभिजनः? कावस्य मातापितरौ? कं देशं स्वजन्मना असावलञ्चकार? इत्यादि किमपि ज्ञातुम् आधाराः नैव सन्ति। ग्रन्थस्य शिवस्तुतिरूपत्वात्, कर्ता शिवस्य भक्तः। मखीत्युपनामश्रवणात्, यागादिकरणे श्रद्धावतां ब्राह्मणानां कुले जात इत्येतावन्मात्रं वक्तुं प्रभवामः।

अपि च ग्रन्थकर्ता अद्वैतमतावलम्बीत्यत्र न संशयः। यतः केषुचित् श्लोकेषु अद्वैततत्त्वानि स्पष्टं दृश्यन्ते, यथा—

मायोपाधिमुपेत्यैकोऽप्यनेकस्त्वं हि भाससे।
गौरीपते मम जलचन्द्रन्यायादिति स्मृतिः॥ (82)
मायापिञ्छिकया शम्भो चित्रमेतज्जगत्सृजन्।
किमैन्द्रजालिकन्यायात् सर्वान् विभ्रमयस्यलम्॥ (91)
त्वंपदात् तत्पदैकार्थ्यं प्राप्तुमिच्छति मे मनः।
तद्भिक्षुपादप्रसारन्यायात् किमतिरिच्यते?॥ (97)
प्राप्तप्राप्तिस्त्वमेवासि तत्त्वमस्यादिवाक्यतः।
कण्ठचामीकरन्यायादाप्तोक्तात् परमेश्वर॥ (99) इत्यादि।

शब्दलालित्यदृष्ट्या अर्थयोजनादृष्ट्या च कविरयं साधारणः। बहुत्र अनुष्टुप्श्लोकसंघटनेऽपि कविः श्राम्यन्निवोपलक्ष्यते। अस्यान्याः का अपि कृतयो न श्रवणपथातिथीभूता अस्माकम्। शास्त्रेषु लब्धव्युत्पत्तिः तत्रत्यान् न्यायान् स्तोत्रकाव्ये प्रयुयुक्षुरिमम् अल्पगात्रं ग्रन्थं जग्रन्थेत्यूहामहे। अतो नात्र प्रसादौजोमाधुर्यलक्षणगुणा उपमोत्प्रेक्षादयोऽलङ्कारा वा गवेषणीयाः।

नूतनकाव्यदर्शनकुतूहलिनः संस्कृताभिमानिनो ग्रन्थमिमं स्वागतीकरिष्यन्तीति विश्वसिमः। अस्य प्रकटनाय अनुमतिं दत्तवत्यै प्राच्यविद्यासंशोधनालयनिर्देशिकायै अलङ्कारशास्त्रविदुष्यै डा. एच्. पि. देवकीमहोदयायै कार्तज्ञ्यं समर्पयामः।

इति विपश्चिद्वशंवदः
एच् वि. नागराजराव्

## ಮುನ್ನುಡಿ

**ನ್ಯಾಯಶತಕಮ್** ಎಂಬುದು ರಾಮೇಶ್ವರಮಖಿಯು ರಚಿಸಿರುವ ಒಂದು ನೂರು ಅನುಷ್ಟುಪ್ ಶ್ಲೋಕಗಳನ್ನುಳ್ಳ ಸಣ್ಣ ಗ್ರಂಥ. ಇದರ ಮುಖ್ಯ ವಿಷಯ ಶಿವಸ್ತುತಿ, ಆದರೂ ಮುಖ್ಯ ಉದ್ದೇಶ ನ್ಯಾಯಗಳ ಪರಿಚಯ. ಲೌಕಿಕನ್ಯಾಯಗಳು ಗಾದೆಯ ಮಾತುಗಳಂತೆ ಸಂಸ್ಕೃತ ಭಾಷೆಯ ಅವಿಭಾಜ್ಯ ಅಂಗವಾಗಿ ಸೇರಿಹೋಗಿವೆ. ಹಾಗೆಯೇ ಕೆಲವು ಶಾಸ್ತ್ರೀಯನ್ಯಾಯಗಳೂ ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಬಳಕೆಯಲ್ಲಿವೆ. ಇವು ದೃಷ್ಟಾಂತವನ್ನು ಅಥವಾ ಸಾಮಾನ್ಯ ನಿಯಮವನ್ನು ಅಚ್ಚುಕಟ್ಟಾಗಿ, ಹೃದಯಸ್ಪರ್ಶಿಯಾಗಿ ತಿಳಿಸುವ ಶಕ್ತಿಯನ್ನು ಹೊಂದಿರುವುದರಿಂದ ಗ್ರಂಥಕಾರರು ಅಲ್ಲಲ್ಲಿ ಇವನ್ನು ಬಳಸುತ್ತಾರೆ. ಗ್ರಂಥಕಾರನು ಅಂಥ ಒಂದು ನೂರು ನ್ಯಾಯಗಳನ್ನು ಪರಿಚಯಿಸುವುದಕ್ಕಾಗಿ ಒಂದೊಂದು ಶ್ಲೋಕದಲ್ಲಿ ಒಂದೊಂದು ನ್ಯಾಯವನ್ನಿಟ್ಟು ಗ್ರಂಥವನ್ನು ರಚಿಸಿದ್ದಾನೆ.

**ಗ್ರಂಥಕಾರ :** ಈ ಗ್ರಂಥವನ್ನು ರಚಿಸಿದವನು ರಾಮೇಶ್ವರಮಖಿ. ಗ್ರಂಥದ ಕೊನೆಯ ಪದ್ಯದಲ್ಲಿ ಇದು ಸ್ಪಷ್ಟವಾಗಿ ಹೇಳಿದೆ—

ರಾಮೇಶ್ವರಮಖಿಪ್ರೋಕ್ತಂ ಗೌರೀಶಾರ್ಪಿತಮಿಷ್ಟದಮ್ ।
ಪಠಂತು ನ್ಯಾಯಶತಕಂ ಪಂಡಿತಾ ನ್ಯಾಯದರ್ಶಿನಃ ॥ (101)

ಇಡೀ ಗ್ರಂಥವು ಶಿವಸ್ತುತಿರೂಪವಾಗಿದ್ದು ಶಿವಾರ್ಪಿತವಾಗಿರುವುದರಿಂದ ಗ್ರಂಥಕಾರನು ಶಿವನ ಶ್ರೇಷ್ಠ ಭಕ್ತನೆಂಬುದು ಸ್ಪಷ್ಟ. ಅಲ್ಲದೆ ಇವನ ಹೆಸರಿನ ಕೊನೆಯಲ್ಲಿ **ಮಖಿ** ಎಂಬ ಪದವಿರುವುದರಿಂದ ಯಜ್ಞಯಾಗಗಳನ್ನು ನಡೆಸುತ್ತಿದ್ದ ಬ್ರಾಹ್ಮಣರ ವಂಶದಲ್ಲಿ ಇವನು ಹುಟ್ಟಿರಬೇಕೆಂದೂ ಊಹಿಸಬಹುದು. ಅಲ್ಲದೆ ಅನೇಕ ಶ್ಲೋಕಗಳಲ್ಲಿ ಇವನು ಅದ್ವೈತದ ಪರಿಭಾಷೆಯ ಪದಗಳನ್ನೂ ಪರಿಕಲ್ಪನೆಗಳನ್ನೂ ಬಳಸಿದ್ದಾನೆ. ಉದಾಹರಣೆಗೆ—

ಪ್ರಾಪ್ತಪ್ರಾಪ್ತಿಸ್ತ್ವಮೇವಾಸಿ ತತ್ತ್ವಮಸ್ಯಾದಿವಾಕ್ಯತಃ ।
ಕಂಠಚಾಮೀಕರನ್ಯಾಯಾದಾಪ್ತೋಕ್ತ್ಯಾತ್ ಪರಮೇಶ್ವರ ॥

ಎಂಬಲ್ಲಿ "ತತ್ತ್ವಮಸಿ" ಎಂಬ ಮಹಾವಾಕ್ಯವನ್ನು ಉದಾಹರಿಸಿ ಮೋಕ್ಷ ಎಂದರೆ ಅದು ಅಪ್ರಾಪ್ತಪ್ರಾಪ್ತಿಯಲ್ಲ—ಕೇವಲ ಪ್ರಾಪ್ತಪ್ರಾಪ್ತಿ ಎಂದು ಹೇಳಲಾಗಿದೆ. ಇದಕ್ಕೆ ಕೊಟ್ಟಿರುವ ಕಂಠಚಾಮೀಕರನ್ಯಾಯವೂ ಅದ್ವೈತಸಿದ್ಧಾಂತದಲ್ಲಿ ಪ್ರಸಿದ್ಧವಾಗಿದೆ. ಕತ್ತಿನಲ್ಲೇ ಇದ್ದ ಚಿನ್ನದ ಹಾರವನ್ನು ಎಲ್ಲೆಲ್ಲೋ ಕಷ್ಟಪಟ್ಟು ಹುಡುಕಿ ಕೊನೆಗೆ ಹಾರ ನಿಮ್ಮ ಕತ್ತಿನಲ್ಲೇ ಇದೆಯಲ್ಲಾ ಎಂದು ಯಾರೋ ಹೇಳಿದಾಗ ಜ್ಞಾನೋದಯವಾಗುತ್ತದೆ. ದುಃಖನಿವೃತ್ತಿಯಾಗಿ ಆನಂದಲಾಭವೂ ಇದೆ. ಆದರೆ ಅಲ್ಲಿ ಹೊಸದಾಗಿ ಏನೂ ಸಿಕ್ಕಿಲ್ಲ. ಅದು ಮೊದಲೇ ನಮ್ಮಲ್ಲಿ ಇತ್ತು. ಮೋಕ್ಷವೂ ಇದೇ ರೀತಿಯಾಗಿ ನಮ್ಮಲ್ಲಿ ಸದಾ ಇರುವ ಸ್ವ ಸ್ವರೂಪವು ಅವಿದ್ಯೆಯಿಂದ ಮರೆಯಾಗಿದ್ದು ಶ್ರುತಿವಾಕ್ಯಗಳಿಂದ ಜ್ಞಾಪಿತವಾದಾಗ ಆಗುವ ಅವಿದ್ಯೆಯ ನಿವೃತ್ತಿ. ಅದರಿಂದ ಸ್ವರೂಪ ಸಾಕ್ಷಾತ್ಕಾರ.

ಹೀಗೆ ಅನೇಕ ಅದ್ವೈತತತ್ತ್ವಗಳನ್ನು ಈ ಗ್ರಂಥದಲ್ಲಿ ಉಲ್ಲೇಖಿಸಿರುವುದರಿಂದ ರಾಮೇಶ್ವರಮಖಿ ಅದ್ವೈತಮತಾನುಯಾಯಿ ಎಂಬುದು ನಿರ್ವಿವಾದಾತೀತವಾಗಿದೆ.

**ನ್ಯಾಯಶತಕ :** ನ್ಯಾಯಶತಕ ಎಂಬ ಹೆಸರಿಗೆ ಅನುಗುಣವಾಗಿ ಗ್ರಂಥದಲ್ಲಿ ಒಂದು ನೂರು ನ್ಯಾಯಗಳ ನಿರೂಪಣೆ ಇರಬೇಕು. ಆದರೆ ಹಾಗಿಲ್ಲ. ಒಟ್ಟು ಇರುವ ನೂರೊಂದು (101) ಶ್ಲೋಕಗಳಲ್ಲಿ ಮೊದಲನೆಯದು ಮಂಗಳ ಶ್ಲೋಕ.

ವಿನ್ಯಸ್ಯ ಚಿತ್ತಂ ಶೈಲೇಂದ್ರಕನ್ಯಾಧೀಶಪದಾಂಬುಜೇ ।
ಸನ್ನ್ಯಾಯಶತಕಂ ವಕ್ಷ್ಯೇ ಧನ್ಯವಿದ್ವತ್ಸುಖಾವಹಮ್ ॥

ಇದರಲ್ಲಿ ಯಾವ ನ್ಯಾಯವೂ ಇಲ್ಲ. ಈಗಾಗಲೇ ಉದಾಹರಿಸಿರುವ ಅಂತಿಮ ಶ್ಲೋಕದಲ್ಲೂ ನ್ಯಾಯವಾವುದೂ ಉಲ್ಲಿಖಿತವಾಗಿಲ್ಲ. ಉಳಿದ 99 ಶ್ಲೋಕಗಳಲ್ಲಿ ಒಂದೊಂದರಲ್ಲಿ ಒಂದೊಂದು ನ್ಯಾಯವನ್ನು ಹೇಳಿರುವುದರಿಂದ ಒಟ್ಟು 99 ನ್ಯಾಯಗಳು ಮಾತ್ರ ಇಲ್ಲಿ ಕಂಡುಬರುತ್ತವೆ. ಹೀಗೆ ಒಂದು ನ್ಯಾಯ ಕಡಿಮೆಯಾಗಿರುವುದಕ್ಕೆ ಗ್ರಂಥಕರ್ತನ ಪ್ರಮಾದ ಕಾರಣವೋ ಅಥವಾ ಪುಸ್ತಕದ ಪ್ರತಿಯನ್ನು ಮಾಡಿದ ಲಿಪಿಕಾರನ ಅನವಧಾನತೆ ಕಾರಣವೋ ತಿಳಿಯದು.
ಅಥವಾ, ಎಪ್ಪತ್ತಾರನೆಯ ಶ್ಲೋಕದಲ್ಲಿ ಎರಡು ನ್ಯಾಯಗಳಿವೆಯೆಂದು ಹೇಳಬಹುದು.

ಶಂಭೋ ಶಿಲಾಕ್ಷರನ್ಯಾಯಃ ಪ್ರಾರ್ಥ್ಯೋ ಮೇ ತ್ವದನುಗ್ರಹಃ ।
ನಾಸ್ಯೋ ಜಲಲಿಪಿನ್ಯಾಯಾನ್ನ ತಿಷ್ಠತಿ, ನ ದೃಶ್ಯತೇ ॥

ಇಲ್ಲಿ ಶಿಲಾಕ್ಷರನ್ಯಾಯ, ಜಲಲಿಪಿನ್ಯಾಯಗಳೆರಡನ್ನೂ ಹೇಳಿರುವುದರಿಂದ ಒಟ್ಟು ನೂರು ನ್ಯಾಯಗಳನ್ನು ಹೇಳಿದಂತಾಯಿತೆಂದು ಗ್ರಂಥಕರ್ತನು ಇನ್ನೊಂದು ಶ್ಲೋಕವನ್ನು ರಚಿಸಿಲ್ಲದಿರಬಹುದು.

**ನ್ಯಾಯಗಳು :** ನ್ಯಾಯಶಬ್ದಕ್ಕೆ ಅನೇಕ ಅರ್ಥಗಳಿದ್ದರೂ ಇಲ್ಲಿ ವಿವಕ್ಷಿತವಾಗಿರುವುದು ಗಾದೆಯ ಮಾತುಗಳಂತೆ ಸಂಸ್ಕೃತದಲ್ಲಿ ರೂಢಿಗೆ ಬಂದಿರುವ ದೃಷ್ಟಾಂತಗಳು ಅಥವಾ ಶಾಸ್ತ್ರ ನಿಯಮಗಳು. ಉದಾಹರಣೆಗೆ **ಸೂಚೀಕಟಾಹ ನ್ಯಾಯ.** ಕಮ್ಮಾರನು ಒಂದು ಸೂಜಿಯನ್ನೂ ಕಟಾಹವನ್ನೂ (ಕೊಪ್ಪರಿಗೆಯನ್ನೂ) ಮಾಡಿಕೊಡಬೇಕಾಗಿರುತ್ತದೆ. ಕೊಪ್ಪರಿಗೆ ಬೇಕಾದವನು ಮೊದಲೇ ಹೇಳಿದ್ದರೂ ಕೂಡ, ಕಮ್ಮಾರನು ಮೊದಲು ಸೂಜಿಯನ್ನು ಮಾಡಿಕೊಟ್ಟು, ಆಮೇಲೆ ಕಟಾಹವನ್ನು ಮಾಡಲಾರಂಭಿಸುತ್ತಾನೆ. ಏಕೆಂದರೆ ಸೂಜಿಯನ್ನು ಮಾಡಲು ಕೆಲವು ನಿಮಿಷಗಳೇ ಸಾಕು. ಕಟಾಹವನ್ನು ಮಾಡಲು ಹಲವು ದಿನಗಳು ಬೇಕು. ಹಾಗೆ ದೀರ್ಘಕಾಲಸಾಧ್ಯವಾದ ಕೆಲಸವನ್ನು ಬದಿಗಿಟ್ಟು, ಶೀಘ್ರಸಾಧ್ಯವಾದ ಕೆಲಸವನ್ನು ಮೊದಲು ಮಾಡಿಕೊಡುವಾಗ **ಸೂಚೀಕಟಾಹನ್ಯಾಯವನ್ನು** ಉದಾಹರಿಸಲಾಗುತ್ತದೆ. ಇದು ಲೋಕವ್ಯವಹಾರಸಿದ್ಧವಾದ ಲೌಕಿಕನ್ಯಾಯ.

**ಕಪಿಂಜಲಾಧಿಕರಣನ್ಯಾಯವು** ಶಾಸ್ತ್ರನ್ಯಾಯ. ಏಕೆಂದರೆ ಇದು ಪ್ರಸಿದ್ಧವಾಗಿರುವುದು ಮೀಮಾಂಸಾಶಾಸ್ತ್ರದಲ್ಲಿ. ಕಪಿಂಜಲ ಎಂಬುವುದೊಂದು ಪಕ್ಷಿ. **ಕಪಿಂಜಲಾನ್ ಆಲಭೇತ** ಎಂಬ ವೇದವಾಕ್ಯವನ್ನನುಸರಿಸಿ ಇಷ್ಟ ಬಂದಷ್ಟು ಕಪಿಂಜಲಗಳನ್ನು ಕೊಲ್ಲಬಾರದು. ಏಕೆಂದರೆ **ನ ಹಿಂಸ್ಯಾತ್ ಸರ್ವಭೂತಾನಿ** (ಯಾವ ಪ್ರಾಣಿಗಳಿಗೂ ಹಿಂಸೆಯನ್ನು ಉಂಟು ಮಾಡಬಾರದು) ಎಂಬ ವೇದವಾಕ್ಯಕ್ಕೆ ವಿರೋಧ ಬರುತ್ತದೆ. 'ಕಪಿಂಜಲಾನ್' ಎಂದು ಬಹುವಚನವಿರುವುದರಿಂದ ಅದಕ್ಕೆ ವಿರೋಧ ಬರದಂತೆ ಮೂರನ್ನು ಮಾತ್ರ ಕೊಲ್ಲಬಹುದು. ಇಲ್ಲಿ ಬಹುತ್ವ ತ್ರಿತ್ವದಲ್ಲಿ ಪರ್ಯವಸಾನವನ್ನು ಪಡೆಯುತ್ತದೆ.

ಕವಿಗಳ ಮತ್ತು ದಾರ್ಶನಿಕರ ಗ್ರಂಥಗಳಲ್ಲಿ ಇಂಥ ನೂರಾರು ನ್ಯಾಯಗಳು ಪ್ರಾಸಂಗಿಕವಾಗಿ ಬರುತ್ತವೆ. ಕರ್ನಲ್ ಜೇಕಬ್‌ರವರು ಇಂಥ ನ್ಯಾಯಗಳನ್ನೆಲ್ಲಾ ಸಂಗ್ರಹಿಸಿ A Handful of Popular Maxims (ಲೌಕಿಕ ನ್ಯಾಯಾಂಜಲಿಃ) ಎಂಬ ಗ್ರಂಥವನ್ನು ರಚಿಸಿ 400ಕ್ಕೂ ಹೆಚ್ಚು ನ್ಯಾಯಗಳನ್ನು ಬೆಳಕಿಗೆ ತಂದಿದ್ದಾರೆ. ಕನ್ನಡ ದಲ್ಲಿ ವಿದ್ವಾನ್ ಎನ್. ರಂಗನಾಥ ಶರ್ಮರು ಲೋಕನ್ಯಾಯಗಳನ್ನೆಲ್ಲಾ ವಿವರಿಸುವ ಗ್ರಂಥವನ್ನು ನಿರ್ಮಿಸಿ ಕನ್ನಡಿಗರಿಗೆಲ್ಲಾ ಮಹೋಪಕಾರವನ್ನು ಮಾಡಿದ್ದಾರೆ. ಬೇರೆ ದೇಶಭಾಷೆಗಳಲ್ಲೂ ಇಂಥ ಗ್ರಂಥಗಳು ಹಲವಾರು ರಚಿತವಾಗಿವೆ.

ಈ ನ್ಯಾಯಗಳನ್ನೇ ಬಳಸಿಕೊಂಡು ರಚಿತವಾಗಿರುವ ಸ್ತೋತ್ರವೆಂದರೆ **ರಾಮೇಶ್ವರಮುಖಿಯ ನ್ಯಾಯಶತಕ** ಒಂದೇ ಎಂದು ನಮಗೆ ತೋರುತ್ತದೆ. ಇಂಥ ಗ್ರಂಥವನ್ನು ಓದುಗರ ಕರಕಮಲಗಳಲ್ಲಿ ಇಡಲು ಸಂತೋಷವಾಗುತ್ತದೆ.

ಇದನ್ನು ಪ್ರಕಟನೆಗೆ ಸಿದ್ಧಪಡಿಸಲು ಅನುಮತಿಯನ್ನು ನೀಡಿದ ಪ್ರಾಚ್ಯವಿದ್ಯಾ ಸಂಶೋಧನಾಲಯದ ನಿರ್ದೇಶಕರಾದ ಡಾ. ಎಚ್. ಪಿ. ದೇವಕಿ ಅವರಿಗೆ ನನ್ನ ಅನಂತ ಧನ್ಯವಾದಗಳು.

ಇಂತು ವಿದ್ವಜ್ಜನ ವಿಧೇಯ

**ಎಚ್. ವಿ ನಾಗರಾಜರಾವ್**

## रामेश्वरमखिविरचितं
## न्यायशतकम्

विन्यस्य चित्तं शैलेन्द्रकन्याधीशपदाम्बुजे ।
[1]सन्न्यायशतकं वक्ष्ये धन्यविद्वत्सुखावहम् ॥ १ ॥

श्री चन्द्रमौले मां रक्ष नीचैः प्राग्लोकरक्षणात् ।
सूचीकटाहन्यायादालोचने स्थूलसूक्ष्मयोः ॥ २ ॥

वाचस्पतिनुतेश त्वां वाचाकलयतां नृणाम् ।
वीचीतरङ्गन्यायात्स्युः प्राचुर्येणैव सम्पदः ॥ ३ ॥

स्वयंज्योतिस्स्व[2]रूपस्त्वमन्तर्यामिन् महेश्वर ।
कथं शम्भो बहिर्घटदीपन्यायान्न भाससे ॥ ४ ॥

शम्भो कटाक्षलेशोऽपि मयि न्यस्तो भवेद्यदि ।
भक्त्या [3]एवाहितवट बीजन्यायात्प्रवर्धते ॥ ५ ॥

महादेव मदायौ तौ रागद्वेषौ पुनस्त्विदः (?) ।
निष्कृष्य सुन्दोपसुन्दन्यायान्नाशय सत्वरम् ॥ ६ ॥

गौरीश मिथ्याज्ञानं मे निवारय तदाश्रितम ।
दोषादिकं तदा दण्डापूप[4]न्यायाद गमिष्यति ॥ ७ ॥

गौरीश त्वत्कटाक्षे तु सत्यसत्येकदा श्रियः ।
खले कपोतन्यायात्स्युः ताः स्थिता अस्थिता नृषु ॥ ८ ॥

गौरीरमण ते रूपं सततं ध्यायतो मम ।
सम्पादय त्वं भ्रमरकीटन्यायात्स्वरूपताम् ॥ ९ ॥

स्वव्यापारेणैव[5] बद्ध्वा मच्चित्तं निर्मलं कुरु ।
गिरिजाधिपते गोधापुच्छन्यायादिहाद्भुतम् ॥ १० ॥

ज्ञानमालम्ब्य मच्चित्तं कर्म त्यजति सञ्चितम ।
गौरीश तृण[6]जलूकान्यायात त्वत्कृपया[7]ध्रुवम् ॥ ११ ॥

कटाक्षो मयि निक्षेप्य इहामुत्र स एव हि ।
गौरीरमण काकाक्षिन्यायादन्वेति सिद्धये ॥ १२ ॥

---

1 सन्याय 2 रूपस्त्वम् 3 एव हित 4 न्यायादमिष्यति 5 बध्वा
6 जलूक 7 धृवम्

त्वामदृष्ट्वा मम मनो विषयेषु प्रवर्तते ।
यच्छाखाग्रन्यायात्प्रदर्शय फलं शिव ॥ १३ ॥

धावन्तमनुधाव त्वं मां त्वन्नामानुवादनम ।
गौरीनायक गोवत्सन्यायादिह मुहुर्मुहुः ॥ १४ ॥

न्यस्य मध्ये जन्म[1]मृत्य्वोर्मां वृथा बाधसे मुहुः ।
ईश [2]संदशनीन्यायान्मां मुञ्च कृपया भृशम ॥ १५ ॥

स्वामी त्वमेव लोकानां भृत्योऽहं तव शङ्कर ।
द्राक् स्वामिभृत्यन्यायाद्वा मह्यं देह्यधिकश्रियम ॥ १६ ॥

विद्यागुरुस्त्वं सर्वेषां शिष्यं मामनुगृह्य च ।
स्वच्छां विद्यामीश गुरुशिष्यन्यायात प्रयच्छ मे ॥ १७ ॥

महादेव महद्रूपं प्रदर्श्य कृपया मम ।
[3]स्थूलारुन्धतीन्यायादणुरूपं च दर्शय ॥ १८ ॥

भुक्ति सम्प्रति सन्धित्सोर्मुक्तिः प्रच्यवते [मम] ।
शम्भो तुन्दिलसुरतन्यायान्नैतद द्वयं कुरु[हर?] ॥ १९ ॥

दोषान् बहूनधःकृत्य गुणानेव स्फुटीकुरु ।
गौरीश [4]चालनीन्यायान्मम [5]विज्ञापनेयती ॥ २० ॥

जन्मप्रभृति मे भक्तिस्त्वयि संजायते पुनः ।
[6]स्थूणानिखननन्यायात तां दृढीकुरु शङ्कर ॥ २१ ॥

उपर्युपरि जातं चेत पूर्वं पूर्वं विनश्यति ।
कदम्बमुकुलन्यायाज्जगच्छम्भो तवाज्ञया ॥ २२ ॥

क्वाहं [7]क्व त्वं क्व मे भक्तिः क्व त्वरस्तुत्युद्यमः शिव ।
स काकतालन्यायात स्यादिति निश्चित्य रक्ष माम् ॥ २३ ॥

रहस्येऽपि कृतं पापं ज्ञात्वा प्रहरसीश माम् ।
तद[8]घट्टकुटीप्रभातन्यायात् किं नु पृथग्भवेत ॥ २४ ॥

अचञ्चलाया मद्भक्तेस्त्वदृढानुग्रहस्य च ।
शम्भो सतीपतिन्यायात कृत्वासक्तिं सदाव माम् ॥ २५ ॥

---

1 मृत्यो 2 संदशनि 3 स्थूलारुन्धति 4 चालनि 5 विज्ञापनेयति
6 स्थाण खनन 7 क त्वं 8 घट्टकुट्ट

जन्मान[ले] निरात्येऽहं तस्मिन् बलवतारिणा ।
मत्स्यन्यायाद् बाधितश्चेत् किं फलं ते वदेश्वर ॥ २६ ॥

गौरीश त्वां समुद्दिश्य परिभ्रमय मे मनः ।
कुला[ल]चक्रन्याया[दभोः] बम्भ्रमीति न चान्यथा ॥ २७ ॥

दोषाकुलस्य मे प्रायो भक्तिमात्रं निरीक्ष्य ते ।
स्थालीपुलाकन्यायाद्वा पालनीयोऽहमीश्वर ॥ २८ ॥

कैलासवासिन् मां पश्य दूरस्थं कृपयेश्वर ।
सिंहावलोकनन्यायात् सुरसिंह गजान्तक ॥ २९ ॥

गृहीत्वा तव पादाब्जं न त्यजत्यम्बिकापते ।
निर्भत्सनेऽपि मर्कटमुष्टिन्यायाद्धि मे मन ॥ ३० ॥

गौरीश त्वयि मद्भक्तेर्बोधं जनय निर्मलम् ।
लोके बीजाङ्कुरन्यायात् स ततः सा ततो भवेत् ॥ ३१ ॥

सहैहिकसुखेनेश मम ज्ञानौषधं दिश ।
द्राग्गोड[1]जिह्विकान्यायाद् भवरोगनिवृत्तये ॥ ३२ ॥

अन्तःकरणवृत्तिर्मे त्वदाकारास्ति शङ्कर ।
चित्रं घुणाक्षरन्यायात् ततः साक्षात्कृतो भव ॥ ३३ ॥

त्वां विना विषयेष्वेवमसुखेष्वस्थिरेषु च ।
शम्भो मरुमरीचिकान्यायाद् धावति मे मनः ॥ ३४ ॥

गौरीश त्वमनाधारस्त्वनाधेयं हि मे मनः ।
द्राङ्नष्टाश्वदग्धरथन्यायाद् योजय तद्द्वयम् ॥ ३५ ॥

ईशात्रामुत्र सर्वत्र त्वद्भावयं सकृदीरितम् ।
तन्त्रन्यायात्फलति मे ह्यनेकार्थोपकारकम् ॥ ३६ ॥

ज्ञानाज्ञानलवान् शम्भो[2] तांस्तेजस्तिमिरोपमान् ।
[3]मदीयांस्तिलतण्डुलन्यायान्मिश्रान् पृथक् कुरु ॥ ३७ ॥

श्रितकल्पद्रुमेशान चित्तवृत्तिर्ममानिशम् ।
त्वां तु वृक्षलतान्यायात्परितो [4]वर्वृतीत्यहो ॥ ३८ ॥

आनन्दैकरसं त्वां तु हित्वान्यद्विषयन्तरम् ।
घृतकोशातकीन्यायादिच्छतीश्वर मे मनः ॥ ३९ ॥

---

1 जिंह्विका 2 तान्तेजस्तिमिरोपमान 3 मदीयान्तिल 4 ववृतेत्यहो

विषयैर्भग्नमपि मे चेतस्संसृज्यते त्वयि ।
तेजस्विन्नीश्वर जतुकाष्ठन्यायादिहानिशम् ॥ ४० ॥

प्रारब्धकर्मानुभवो मां न त्यजति सम्प्रति ।
स गले पादुकान्यायात् प्रसन्नेऽपि त्वयीश्वर ॥ ४१ ॥

स्वयंप्रकाश[1]रूपस्त्वं मयि स्थित्वा महेश्वर ।
[2]क्षिप मे देहलीदीपन्यायाद् बाह्यान्तरं तमः ॥ ४२ ॥

त्वत्कटाक्षेण मय्यन्तः सर्वं पापचयं हर ।
गौरीश गजकपित्थन्यायादेवमिहाद्भुतम् ॥ ४३ ॥

मायाबन्धोऽस्ति दुस्त्याज्यो मम जन्मनि जन्मनि ।
गौरीश शृङ्खलान्यायात्तं छिन्धि करुणाम्बुधे ॥ ४४ ॥

सूक्ष्मापि चित्तवृत्तिर्मे त्वामाश्रित्याति[3]विस्तृता ।
शम्भो जलतैलबिन्दुन्यायादेव भवत्यलम् ॥ ४५ ॥

त्वदन्यदेवनिन्दा मे न दोषाय हि सा पुनः ।
गौरीपते नहि निन्दा न्यायात्ते स्तुतये [4]ध्रुवम् ॥ ४६ ॥

सुखिनं कुरु मां नित्यं दुःखिनं हर शङ्कर ।
अस्मिन् सविशेषणे हि न्यायाद्विधिनिषेधधीः ॥ ४७ ॥

चित्तवृत्तेर्मदीयायाः द्राग्विशेष[5]फलाश्रुतौ ।
गौरीश विश्वजिन्न्यायात् त्वमेव फलमस्त्यलम् ॥ ४८ ॥

अज्ञोऽहमिति विज्ञप्तिः सर्वज्ञस्य महेश ते ।
सा पिष्टपेषणन्यायादीषन्मे न [6]विशिष्यते ॥ ४९ ॥

गृहीतो यद्यहं मुच्ये मुक्तः गृह्णाम्यघं पुनः ।
तद्भ्रान्तभोजनन्यायान्नान्यच्छम्भो गृहाण माम् ॥ ५० ॥

शिवभक्तान् [7]स्वीकुरु नः सर्वास्मत्कुलजानपि ।
छत्रिन्यायादुदीर्यन्ते शिवभक्ता इति स्फुटम् ॥ ५१ ॥

शिवनाम स्मरत्येतदित्येवं मे मनो [8]वशे ।
कार्यं कवाटन्यायाद् द्रागेवं चेत् सुखमीश्वर ॥ ५२ ॥

---

1 रूपत्वं 2 क्षिप्रं 3 विश्रुतं 4 ध्रुवम् 5 फलश्रुतौ 6 विशेष्यते
7 स्विकुरु 8 वशी

प्रपञ्चयसि संकोचयसि सर्वं जगच्छिव ।
मायोपाधिवशाल्लूतातन्तुन्यायादिहाद्भुतम् ॥ ५३ ॥

अनिमेषानपि स्वल्पसुखाशाब्धिनिपातिनः ।
उद्धृत्य बडिशन्यायात् क्षिप्रं प्रहरसीश्वर ॥ ५४ ॥

त्वद्भक्तश्चेज्जनः पापपङ्कमग्नोऽपि निर्मलः ।
कुलालकीटन्यायात स्यात् तवाज्ञा महती शिव ॥ ५५ ॥

मुख्योऽयं शिवशब्दस्ते गौणोऽन्यस्य सदाशिव ।
स गौणमुख्यन्यायात् त्वाम् अभिधत्ते न चेतरम् ॥ ५६ ॥

शम्भो शङ्करशब्दस्ते रूढोऽन्यस्य तु यौगिकः ।
स योगरूढिन्यायात्त्वय्येव शक्तो न च क्वचित ॥ ५७ ॥

परो महेश्वर इति लोकास्त्वामाहुरीश्वर ।
लोके वेदाधिकरणन्यायात्ताः श्रुतयोऽपि च ॥ ५८ ॥

शम्भोऽप्यैश्वर्यशालित्वात् त्वमेवेश्वर [1]उच्यसे ।
सार्वसभ्यं व्याकरणमिति न्यायान्न चेतरः ॥ ५९ ॥

ईश्वरानीश्वर इति त्वामज्ञाः प्रवदन्ति यत् ।
शतान्धकूपप्रवेशन्यायात्तत् किं नु भिद्यते ? ॥ ६० ॥

विषयेषु सुखासक्त्या मग्नमनस्त्वां विना हर ।
प्रायेण मधुमक्षिकान्यायान्मग्नं तदुद्धर ॥ ६१ ॥

त्वामावरीतुमुद्युक्ता मायेयं परमेश्वर ।
लोकेऽग्निशलभन्यायात् त्वत्त एव विनश्यति ॥ ६२ ॥

भक्तिबद्धं कदाचित्तु पुनर्वक्रं हि मे मनः ।
[2]इह श्वपुच्छन्यायात्तत [3]त्वमृजूकुरु शङ्कर ॥ ६३ ॥

सहस्रनाम[4]स्फुरणे द्वित्रनामस्मृतिर्मम ।
कदाचिच्छते पञ्चाशन्न्यायात्सम्भवतीश्वर ॥ ६४ ॥

महादेव भवत्साम्यमन्यो देवो न चार्हति ।
तद्धस्तिमशकन्यायादिति प्रत्येति मे मनः ॥ ६५ ॥

1 उच्यते 2 इहाश्वपुच्छ 3 त्वमृजुकुरु 4 स्फुरण

सूक्ष्मा [1]सूक्ष्मतरा सूक्ष्मतमा [2]दृष्टिर्ममेश्वर ।
क्रमक्रमेण गोपुच्छन्यायात्त्वय्यचलास्त्वलम् ॥ ६६ ॥

[3]शिव प्रमाणं त्वं [4]त्वत्प्रमेयं सर्वमिदं जगत् ।
मानाधीना मेयसिद्धिरिति न्यायादवैम्यहम् ॥ ६७ ॥

हर मय्यरिषड्वर्गमन्तरेव हि संहर ।
नो चेदयं स्फुटं घटसर्पन्यायादुदेष्यति ॥ ६८ ॥

कठिनं मम चित्तं श्रीगौरीश त्वत्कटाक्षतः ।
द्राक् चन्द्रिकाचन्द्रकान्तन्यायात सम्यग् द्रवीकुरु ॥ ६९ ॥

अगृहीतस्य सर्वस्य त्वत्कटाक्षविशेषतः ।
गौरीश यः स्पर्शवेदिन्यायात्कुरु सुवर्णताम् ॥ ७० ॥

अनुस्यूतांऽस्तु मद्बोधस्त्वद्गुणेष्वखिलेष्वपि ।
गौरीपते मणिगुणन्यायात्ते नाप्यलङ्कृतिः ॥ ७१ ॥

त्वत्सक्ता चित्तवृत्तिर्मे यत्र त्वं तत्र गच्छति ।
पश्य गौरिपते सूचितन्तुन्यायाज्जगत्यलम् ॥ ७२ ॥

शिव त्वद्धीरसत्यागि शास्त्रं सुन्दरमप्यसत् ।
तच्छालमलीफलन्यायान्न भोगार्हमिति ब्रुवे ॥ ७३ ॥

त्वदध्यानहीनचित्तस्य पुंसो भाग्यं निरर्थकम् ।
शम्भो [5]कनाञ्जनन्यायादित्यार्याः प्रवदन्ति हि ॥ ७४ ॥

धर्मार्थद्वितयं व्यर्थं गौरीश त्वामजानतः ।
अजागलस्तनन्यायादिति स्फुरति मद्हृदि ॥ ७५ ॥

शम्भो शिलाक्षरप्रायः प्रार्थ्यो मे त्वदनुग्रहः ।
[6]नान्यो जललिपिन्यायान्न तिष्ठति न दृश्यते ॥ ७६ ॥

असुखेषु सुखभ्रान्त्या विषयेष्वेषु मे मनः ।
किं शुक्तिरजतन्यायाद वृथा भ्रमयसीश्वर ॥ ७७ ॥

त्वामज्ञात्वैवाहमिति बुद्ध्वा मोहाद बिभेम्यहम् ।
गौरीपते रज्जुसर्पन्यायात्तत्त्वं प्रदर्शय ॥ ७८ ॥

---

1 सूक्ष्मतरो 2 दृष्टि ममेश्वर 3 शिवं 4 त्वत्प्रमेयं 5 कणाञ्ज 6 नान्ये

प्रकृतिस्त्वं चित्स्वरूपो जडोऽहं विकृतिस्ततः ।
शम्भो प्रकृतिविकृतिन्यायान्मां प्रकृतिं कुरु ॥ ७९ ॥

ज्ञेयाज्ञेय इति विधिनिषेधौ त्वयि मे स्मृतौ ।
गौरीरमणसामान्यन्यायात्तत्र विधिं दिश ॥ ८० ॥

मनः करण्डे मे ज्ञानरसं पूरय निर्मलम् ।
नारिकेलफलजलन्यायाद् गौरीपतेऽद्भुतम ॥ ८१ ॥

मायोपाधिमुपेत्यकोऽप्नेकस्त्वैयं हि भाससे ।
गौरीपते मम जलचन्द्रन्यायादिति स्मृतिः ॥ ८२ ॥

[1]आरोक्ष्याम्यद्य कैलासमपि तेऽल्पावकाशतः ।
काशावलम्बनन्यायाद्दिश मे साहसं त्विदम ॥ ८३ ॥

जन्म नाशय तदव्याप्ता मृतिर्न स्यादिहेश्वर ।
विभग्न[2]वीवधन्यायात्तद्धि मे निर्भरं सुखम् ॥ ८४ ॥

ज्ञानाञ्जनं मदक्षि त्वमीश भव्यनिधे[3]हितः ।
त्वां हस्तामलकन्यायात सम्यक् पश्याम्यसंशयः ॥ ८५ ॥

मम पापचयश्शम्भो [4]त्वयाग्नि(नि)हतो हठात् ।
अस्तु दग्धपटन्यायाच्छब्दमात्रावशेषतः ॥ ८६ ॥

नेह [5]किञ्चिद्वाञ्छति त्वद्ध्यानानन्दरसेच्छया ।
शिवेच्छा बलवतीति न्यायादेव हि मे मनः ॥ ८७ ॥

अज्ञः पापी महामूर्ख इति ज्ञात्वापि मे सुखम् ।
शम्भो तुष्यतु दुर्जन इति न्यायाद्धि वा कुरु ॥ ८८ ॥

ज्ञानं मम स्थिरीकार्यं जन्मैतत् क्षणभङ्गुरम् ।
गौरीश जलबुद्बुदन्यायादिति बिभेम्यहम् ॥ ८९ ॥

[6]मायापिञ्छिकया शम्भो चित्रमेतज्जगत्सृजन् ।
किमैन्द्रजालिकन्यायात् सर्वान् विभ्रमयस्यलम ॥ ९० ॥

त्रिगुणे त्वयि गौरीश सेयं गुणबहुत्वधीः ।
कपिञ्जलाधिकरणन्यायात [7]त्रित्वेऽध्यवस्यते ॥ ९१ ॥

---

1 आरोक्ष्यारोप्यम्यद्य 2 विविध 3 हतः 4 त्वदाग्नि 5 किञ्चित्त्वांर्थति
6 मायापिञ्छेकया 7 त्रित्वे ध्यवस्यते

दोषानुबद्धं गौरीश त्याज्यं वैषयिकं सुखम् ।
विषपृक्तमधुन्यायात् त्वं निर्दुष्टं सुखं मम ॥ ९२ ॥

शम्भो कटाक्षविस्फूर्तिर्मयि सम्यक् प्रसार्यताम् ।
अटवीचन्द्रिकान्यायात सान्यथा नोपयुज्यते ॥ ९३ ॥

गौरीपते तव पुरः चिरं विज्ञाप्यते मया ।
मन्मनस्त्वय्ययस्कान्तलोहन्यायाद विलीयते ॥ ९४ ॥

दृष्टिः पापरजोजन्म त्वयि न स्फुरतीश मे ।
लोके नेत्र[1]रजोन्यायान्निर्मलां कुरु तां शिव ॥ ९५ ॥

भक्तवत्सल भक्तोऽहमित्या[2]क्रोशामि सन्ततम् ।
[3]त्वमक्षिपक्ष्मन्यायान्मां रक्ष श्रीपार्वतीपते ॥ ९६ ॥

त्वंपदात [4]तत्पदैकार्थ्यं प्राप्तुमिच्छति मे मनः ।
तदभिक्षुपादप्रसारन्यायात किमतिरिच्यते ॥ ९७ ॥

मय्यात्मशब्दाभिधेये परमात्माभिधां दिश ।
गौरी[श] गोबलीवर्दन्यायात् त्वं हि विशेषदृक् ॥ ९८ ॥

प्राप्तप्राप्तिस्त्वमेवासि तत्त्वमस्यादिवाक्यतः ।
कण्ठचामीकरन्यायादाप्तोक्तात् परमेश्वर ॥ ९९ ॥

त्वामेव शरणं यान्तं [5]मामभिन्नं कुरु प्रभो ।
शिव क्षीरोदकन्यायादिति मत्प्रार्थनां शृणु ॥ १०० ॥

रामेश्वरमखिप्रोक्तं गौरीशार्पितमिष्टदम् ।
पठन्तु न्यायशतकं पण्डिता न्यायदर्शिनः ॥ १०१ ॥

न्यायशतकं समाप्तमस्तु ।

---

1 रजन्यायान्निर्मला 2 क्रोष्यामि 3 त्वमक्षिपक्षि 4 तत्पदैकाथ
5 मामाभिन्नं

## न्यायाशतके उपयुक्तानां न्यायानां विवृतं रूपम्

१ सूचीकटाहन्यायः ।

सूची च निर्मातव्या, कटाहश्च निर्मातव्यः। सूची अल्पीयसी, कटाहो महीयान। अतः प्रथमं सूची निर्मातव्या, ततः कटाहः। मम रक्षणम् अल्पीयः, लोकरक्षणं महीयः। अतो मद्रक्षणं प्रथमं कार्यमिति भावः।

२ वीचीतरङ्गन्यायः।

समुद्रे वीची तरङ्गं नुदति, स च वीचीम्। एवं परम्परा अनुवर्तते। तथा शिवानुगृहीतानां सम्पदोऽपीति भावः।

३ घटदीपन्यायः।

घटे न्यस्तो दीपः प्रज्वलन्नपि बहिर्नावलोक्यते, घटेनावृतत्वात। तथा अन्तर्यामिरूपेण स्थितोऽपि शिवो न लक्ष्यते इति तात्पर्यम्।

४ वटबीजन्यायः।

वटवृक्षस्य बीजम् अल्पाकारम्। तच्च भूमावुप्तं काले गते महतो वृक्षस्य रूपं धारयिष्यति। एवं भगवत्कटाक्षोऽपि महत्तमं फलं प्रसूते इति भावः।

५ सुन्दोपसुन्दन्यायः।

सुन्दोपसुन्दौ राक्षसौ सोदरौ च। तिलोत्तमार्थं परस्परं युध्यमानौ उभावपि नष्टौ। तथा मे रागद्वेषौ नश्येताम् इति कवेः प्रार्थना।

६ दण्डापूपन्यायः।

मूषिकेण दण्डो भक्षित इत्युक्ते दण्डावलम्बिता अपूपा अपि भक्षिता इति अर्थात सिद्धं भवति। तथा मिथ्याज्ञाने निवारिते तदाश्रिता दोषा अपि निवारिता भविष्यन्तीति भावः।

७ खले कपोतन्यायः।

खले धान्यानां राशिर्भवति। अतः कपोता धान्यभक्षणार्थं युगपत आगच्छन्ति। तेषां त्रासनाय भाण्डादिभिः शब्दे कृते, सर्वे युगपत

उत्पत्य अदृश्या भवन्ति। एवं भगवत्कटाक्षे सति सम्पदः युगपदायान्ति, तस्मिन्नसति ताः युगपन्नश्यन्तीति भावः।

८ भ्रमरकीटन्यायः।

कीटो भ्रमरं ध्यायन् तत्स्वरूपं प्रपद्यते। तथा शिवं ध्यायतो मे शिवस्वरूपं स्यादिति भक्त आशास्ते।

९ गोधापुच्छन्यायः।

गिरिं भित्तिं सालं वा आरुरुक्षवो गोधाम् उपरि प्रथमं प्रेषयन्ति। तत्पुच्छबद्धां रज्जुं गृहीत्वा तदवलम्बनेन सुखं स्वयम् अपि आरोहन्ति।

१० तृणजलूकान्यायः।

(तृणजलायुकान्यायः) तृणजलूका तृणस्यान्तं गत्वा तृणान्तरमाक्रम्य तत आत्मानम् उपसंहरति। ततः पूर्वं तृणं मुञ्चति। एवम् आत्मा ज्ञानमालम्ब्य पूर्वाश्रितं कर्म मुञ्चतीति भावः।

११ काकाक्षिन्यायः (काकाक्षिगोलकन्यायः)

काकस्य एकमेवाक्षि द्वयोर्गोलकयोः पर्यायेण दृश्यते। एवं भक्त इह चामुत्र च भगवत्कटाक्षेण एकेन रक्ष्यते।

१२ शाखाप्लवगन्यायः।

प्लवगः कपिः। स चाञ्चल्यात् शाखातः शाखां गच्छन्नेव श्राम्यति, न क्वचिदवतिष्ठते। एवं मानवस्य मानसमपि। फले दृष्टे तु कपिः किञ्चित् तिष्ठति। तथा फलं मे दर्शयेति कविः शिवं याचते।

१३ गोवत्सन्यायः।

गौर्यत्र धावति, तत्र वत्सोऽनुधावति। तथा माम् अनुधाव, यस्मादहं सदा त्वन्नाम ध्यायामीति भक्तः प्रार्थयते।

१४ संदंशनीन्यायः।

संदंशनी (सन्दशः) नाम यन्त्रविशेषः। तस्य द्वौ दन्तौ ग्राह्यं वस्तु दृढं गृह्णीतः। तदा बाधा जायते तस्य अङ्गुल्यादेर्वस्तुनः। यन्त्र-

प्रयोक्ता यदि स्वयं न बन्धं शिथिलयति, तर्हि मुक्तिरेव नास्ति गृहातस्य। एवं जन्ममरणरूपया संदंशिन्या गृहीतो मानवो न मोक्ष्यते, यदि तत्प्रयोक्ता शिवः करुणया बन्धं न शिथिलतीति भावः।

१५ स्वामिभृत्यन्यायः।

स्वामी श्रीमान्, भृत्यो दरिद्रः। स्वामी यदि किञ्चिन्न ददाति, तर्हि भृत्यः किं कुर्यात्? स्वामिनैव भृत्यः सदा पोषणीयः। तस्य गत्यन्तरं नास्तीति भावः।

१६ गुरुशिष्यन्यायः।

गुरुं विद्यायै शिष्य आश्रयति। गुरुणैव विद्याप्रदानेन शिष्योऽनुग्राह्यः, गुरुं विना शिष्यस्य गतिर्नास्तीति भावः।

१७ स्थूलारुन्धतीन्यायः। (अरुन्धतीदर्शनन्यायः)

यथा अरुन्धतीं दिदर्शयिषुः तत्समीपस्थां स्थूलां ताराम् अमुख्यां प्रथमम् अरुन्धतीति ग्राहयित्वा तां प्रत्याख्याय पश्चादरुन्धतीमेव ग्राहयति तद्वत् प्रथमं शिवः स्वं स्थूलं रूपं ग्राहयतु, पश्चात् स्वीयम् अणुरूपं ग्राहयतु इति भक्तस्य प्रार्थना।

१८ तुन्दिलसुरतन्यायः।

तुन्दिलः स्थूलकुक्षिः। स मैथुनं कुर्वन्नेव प्रियामुखं चुचुम्बिषति। इतो भ्रष्टस्ततो भ्रष्टः उभयवञ्चितो भवति। तथा भुक्तिं मुक्तिं च युगपत्प्रेप्सुरहम् उभयवञ्चितो यथा न स्याम्, तथा कुरु, इति भक्तः शिवं प्रार्थयते।

१९ चालनीन्यायः।

चालनी तितउः। तत्र तण्डुलादिकं शोधनार्थं निक्षिप्यते। चालनी यदा चाल्यते, तदा धूलिपाषाणखण्डतुषादिकम् अधः पतति, शुद्धं धान्यम् उपरि तिष्ठति। तथा दोषान् अधः पातयित्वा गुणान् स्फुटीकुरु इति भक्तो भगवन्तं याचते।

२० स्थूणानिखननन्यायः।

स्थूणा यदा निखन्यते, तदा दाढर्यार्थम् इतस्ततः चालयित्वा गर्ते

पाषाणमृदादि पूरयन्ति। तथा मम भक्तिं त्वयि दृढां कुरु इति कवेर्भावः।

२१ कदम्बमुकुलन्यायः।

कदम्बवृक्षस्य मुकुलानि जातानि निपतन्ति, ततो नूतनानि जायन्ते। तथा जगन्ति पूर्वाणि नश्यन्ति, नूतनानि जायन्ते। शिवाज्ञा तत्र कारणमिति तात्पर्यम्।

२२ काकतालन्यायः। (काकतालीयम्)

अकस्माज्जायमाना क्रिया अनेन न्यायेनोच्यते। तालः करतलयोः शब्दजनकः संयोगः। तस्मिन् क्रियमाणे उत्पतन् काको दैवात् तत्र तालाभ्यामाक्रान्तोऽभूत्। काक आगत्य भूमावपविष्टे तत्क्षणे तदुपरि तालफलं पतितं, स च काको मृत इत्यपि वदन्ति। मानवस्य संसारचिन्ताक्रान्तस्य शिवस्तुत्युद्यमः तथैव आकस्मिक इति कवेर्भावः।

२३ घट्टकुटीप्रभातन्यायः।

राज्ञे देयं करं वणिग्भ्यो यत्र गृह्णन्ति, सा घट्टकुटी। करं दातुम् अनिच्छुर्वणिक् रात्रौ येन केनापि अमार्गेण गतः। किन्तु यदा प्रभातं, तदा घट्टकुट्याः पुरस्तादेव स्थितः। करो दातव्य एवाभवत्। एवं रहस्ये पापं कृत्वाऽपि मानवो देवस्य प्रत्यक्ष एव। पापस्य दण्डं ददात्येव भगवान् इति भावः।

२४ सतीपतिन्यायः।

सती पत्यौ दृढव्रता भवति। तथा मम भक्तिः अचञ्चला। तस्याः शिवानुग्रहस्य च सम्बन्धो दृढोऽस्तु इति भक्तस्य याचना।

२५ मत्स्यन्यायः।

बलवन्तो महान्तो मत्स्याः दुर्बलान् अल्पगात्रान् मत्स्यान् भक्षयन्ति। तथा बलवता पापरूपेणारिणा यद्यहं निपात्ये, किं प्रयोजनम्? इति रोदिति भक्तः।

२६ कुलालचक्रन्यायः।

चक्रं स्वयं न भ्राम्यति। यदा कुलालो भ्रमयति, तदेव तस्य

भ्रमणम्। तथा भगवान् यदा भ्रमयति तदैव मानवमानसं भ्राम्यति, नान्यदेति भावः।

२७ स्थालीपुलाकन्यायः।

स्थाल्यां तुल्यपाकानां पुलाकानाम् एकम् उपमृद्य अन्येषामपि पक्वतां जानन्ति मनुष्याः। भक्तिं निरीक्ष्य मम अन्येषां गुणानाम् अपि भगवत्परत्वं निश्चीयताम् इति वदति कविः।

२८ सिंहावलोकनन्यायः।

सिंहः पुरो गच्छन्नपि पश्चादवलोकयति तदा तदा। तथा लोकमृष्ट्या-दिप्रवृत्तोऽपि शिवो मां पश्यत्विति कवेः प्रार्थना।

२९ मर्कटमुष्टिन्यायः

मर्कटो यदा किञ्चिन्मुष्ट्या गृह्णाति, तदा दृढं गृह्णाति। मुष्टिं सर्वथापि न शिथिलयति। तथा मम मनस्तव पादं गृहीतवदिति स्वभक्तिदार्ढ्यं निवेदयति कविः।

३० बीजाङ्कुरन्यायः

बीजं विना नाङ्कुरोत्पत्तिः, अङ्कुरं विना न बीजोत्पत्तिः। तथा ज्ञानाद् भक्तिः, भक्तेर्ज्ञानम्। भगवान् सर्वशक्तो यदि प्रथमं बोधं जनयिष्यति, ततो भक्तिः, तस्याः निर्मलो बोधः

३१ गौडजिह्विकान्यायः

यथा तिक्तताभिया निम्बरसपानमकुर्वाणस्य बालस्य जिह्वायां गुडलेपं दत्वा पित्रादिस्तं निम्बं पाययति, एवम् ऐहलौकिकं सुखं दत्वा तेन सह ज्ञानं दिश, तदा ज्ञानं स्वीकर्तुं शक्ष्यामीति भक्तस्याशयः।

३२ घुणाक्षरन्यायः

घुणः कीटविशेषः। घुणोत्किरणात् दारुणि कदाचित् कथञ्चिन्निष्पन्न-मक्षरं घुणाक्षरम्। तद्वत् कथञ्चिन्मम चित्तवृत्तिस्त्वदाकारा जाता इति निवेदयति भक्तः।

३३ मरुमरीचिकान्याय:

मरौ मरीचिका दृश्यते। तत्र जलमस्तीति गच्छन् पान्थो जलम् अलब्ध्वा निराशो भवति। एवं विषयसुखमन्विष्य गच्छन मनुष्योऽपि निराशो भविष्यति।

३४ नष्टाश्वदग्धरथन्याय:

कस्यचन रथिकस्य अश्वा नष्टा:, रथे विद्यमानेऽपि स चलितुं न शक्नोति। अन्यस्य रथिकस्य रथो दग्ध:, अश्वा: सन्ति। अनयो: सम्प्रयोगे एकस्याश्वान् अपरस्य रथेन संयोज्य उभौ जिगमिषितं स्थानं गन्तुम् अर्हत:! भगवन्: आधारो नास्ति, भक्तमनसि किमपि आधेयं नास्ति। परस्परं सम्प्रयोगोऽस्तु इति भक्तस्य याचना।

३५ तन्त्रन्याय:

एकम् एव पदं सकृदुच्चारित द्वयोर्बहूनां वा अभिधाने शक्तं चेत् तत्रास्ति तन्त्रम्। तथा भगवता ईरितं वाक्यं बहूनाम् उपकारकं भवतीति भाव:

३६ तिलतण्डुलन्याय:

तिला: कालवर्णा:, तण्डुला: श्वेतवर्णा:। तयोर्मिश्रणे जातेऽपि पृथक् पृथक् भान्ति। तेषां पृथक्करणमपि शक्यम्। एवं भक्तस्य ज्ञानाज्ञानलवा: मिश्रा:। भगवता ते पृथक्कर्तव्या: इति याचते कवि:।

३७ वृक्षलतान्याय:

वृक्षं लता परित: आलिङ्ग्य तदाश्रयेणैव तिष्ठति। तथा भक्तस्य चित्तवृत्तिर्भगवन्तं वव्रृतीति इति वदति कवि:।

३८ घृतकोशातकीन्याय:

घृतं रुचिर, तत्सर्वो बुभुक्षते। कोशातकी तिक्ता, न कश्चित्तद भक्षयितुम् इच्छति। परमात्मा आनन्दैकरसो घृततुल्य:। तदपेक्षया विषयसुखं कोशातकीसदृशम्। तथापि मम मन: परमात्मानं हित्वा विषयसुखमिच्छति इति विषीदति कवि:।

३९ जतुकाष्ठन्याय:

जतु काष्ठे दृढं संसृज्यमानं दृश्यते। तथा मे चेत: त्वयि संसृज्यते इति भगवन्तं वदति भक्त।

४० गले पादुकान्याय:

सपादुको जनो व्रजति क्वचित मध्येमार्गं पादुका छिन्ना। ततस्सा पादे न तिष्ठति चलत:। तां दूरे क्षेप्तुमपि स नेच्छति, कृपणत्वात्। अतो भारायमाणाम् अपि गले बद्ध्वा चरति। तथा प्रारब्धकर्म ज्ञानाग्निदग्धकर्माणं पण्डितम अपि अनुसरतीति भाव:।

४१ देहलीदीपन्याय:

देहल्यां स्थापितो दीपो गृहस्यान्तर्विद्यमानं बहिर्विद्यमानं च तमो नाशयति। तथा भगवान् मे आन्तरं बाह्यं च तमो नाशयतु इति कवि: प्रार्थयते।

४२ गजकपित्थन्याय:

गज: क्रिमिविशेष:। स कपित्थफलं प्रविश्य अन्तस्सारं सर्वं भक्षयति। बहिस्तु फलं सम्यगेव भाति। तथा भगवान् भक्ते प्रविश्य सर्वं पापं नाशयतु इति भक्तस्य याञ्चा।

४३ शृङ्खलान्याय:

चोरादीन् शृङ्खलया बध्नन्ति। बद्ध: स्वयं तां शृङ्खलां छेतुं न शक्नोति। तथा मायाशृङ्खलया सर्वे संसारिणो बद्धा:। तां छिन्धीति भगवन्तं प्रार्थयते।

४४ जलतैलबिन्दुन्याय:

जले पतित: तैलबिन्दु: आशु प्रसरति। तथा अल्पापि मे चित्तवृत्ति-र्भगवति गता शीघ्रं विस्तारं प्राप्नोति इति भाव:।

४५ नहि निन्दान्याय:

अस्य न्यायस्य मूलं " नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु विधेयं स्तोतुम् " इति तन्त्रवार्तिकस्थं वाक्यम्। एवं च शिवेतरदेवतानिन्दा यत्क्रियते, तत्र तात्पर्यं शिवस्य प्रशंसैव, नान्यदिति सिध्यति।

४६ सविशेषणे हि न्यायः

अस्य न्यायस्य मूलं "सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामतः" इति शास्त्रसिद्धान्तः। शिखी ध्वस्त इत्यत्र मनुष्ये पुरस्ताद् विद्यमाने ध्वंसः शिखायां पर्यवस्यति। तथा "सुखिनं कुरु, दुःखिनं हर" इत्यत्र आत्मनो नित्यसिद्धत्वात् तत्र करणं हरणं च बाधितमिति विशेषणभूतयोः सुखदुःखयोः करणं हरणं च अन्वेतीति तात्पर्यम्।

४७ विश्वजिन्न्यायः।

मीमांसाशास्त्रप्रसिद्धोऽयं न्यायः। विश्वजिद्यागस्य किमपि विशिष्टं फलं न श्रूयते। अतस्तस्य फलं स्वर्ग एवेति जैमिनिना निर्णीतम्। तथा भक्तस्य चित्तवृत्तेः गम्यान्तरं विशेषतो नास्ति। अतः परमात्मैव फलमिति निर्णीयते।

४८ पिष्टपेषणन्यायः।

पिष्टस्य पेषणं निरर्थकम्। तथा ज्ञातस्य ज्ञापनम्। सर्वज्ञस्य पुरः अहमज्ञोऽस्मीति विज्ञप्तिर्व्यर्थेति भावः।

४९ वान्तभोजनन्यायः।

वान्तं त्याज्यम्: स्वयं वान्तस्य पुनर्भोजनमसह्यतमम्। तथा त्यक्तस्य पापस्य पुनर्ग्रहणं निन्द्यतमम्। तन्मे मा भूत्। मां गृहाण प्रभो इति भगवन्तं प्रार्थयते कविः।

५० छत्रिन्यायः।

छत्रिणो यान्तीति प्रयोगो भवति सपरिवारे राज्ञि गच्छति। तत्र केचिदेव छत्रिणः, नान्ये। छत्र्यछत्रिसमुदाये छत्रिशब्दो वर्तते। तथा अस्माकं कुले केचन शिवभक्ता आसन्निति कारणात् अस्माकं कुलं शिवभक्तकुलम्। अस्मत्कुलजान् सर्वानपि शिवभक्तान् गणयेति प्रार्थना।

५१ कवाटन्यायः।

कवाटबन्धने कृते अन्तर्विद्यमानो न बहिरागन्तुं बहिर्विद्यमानो वा

अन्तरागन्तुं न शक्नोति। शिवनाम कवाटवत्। अन्तःस्थितं पुण्यं न बहिर्याति, बहिः स्थितं पापं नान्तः।

५२ लूतातन्तुन्यायः।

लूता ऊर्णनाभिः। सा स्वेच्छया तन्तून् विस्तारयति सङ्कोचयति च। तथा भगवान् जगदिदं प्रपञ्चरूपेण विस्तारयति, सङ्कोचयति वा प्रलयकाले स्वेच्छया इति।

५३ बडिशन्यायः।

बडिशं मत्स्यबन्धनम्। अनिमेषाः मीना देवाश्च। यथा मत्स्यग्राही बडिशेन अनिमेषान् जिह्वालौल्यकारणाद ग्रस्तान् प्रहरति, तथा भगवान् अपि देवान् स्वल्पसुखाशाग्रस्तान् कालान्तरे प्रहरति। तान् पुनर्भूमौ निपातयतीत्यर्थ।

५४ कुलालकीटन्यायः।

कुलालकीटः सदा पङ्के स्थितोऽपि तेन लिप्तो न भवति। तथा भगवद्भक्तः पापमग्नोऽपि न तेन लिप्तो भवतीत्यर्थः।

५५ गौणमुख्यन्यायः।

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः। गौणे कार्यं न भवति। शिवशब्दो मुख्यवृत्त्या अभिधया शङ्करमभिधत्ते। इतरं कमपि यद्यभिधत्ते, तर्हि गौण्या वृत्त्यैवेति भावः।

५६ योगरूढिन्यायः।

योगाद्रूढिर्बलीयसी। अतः कस्यापि शब्दस्य यत्र रूढिः, तत्रैव तात्पर्यम्, न तु यत्र योगमात्रं, तत्र। तथा शङ्करशब्दः शिवे रूढः। अन्यत्र यदि प्रयुक्तः स्यात, तत्र यौगिकः। यत्र यो रूढः शब्दः, तत्र स शक्त उच्यते। अतः शङ्करशब्दः शिव एव शक्तो, नान्यत्रेति।

५७ वेदाधिकरणन्यायः।

वेदाधिकरणे मीमांसकैः वेदानाम् अपौरुषेयत्वं साध्यते। वेदाः शि व

महेश्वरं वदन्ति। लोकाः वेदानुसारिणः सन्तः स्वयम् अपि तथा वदन्ति।

५८ सार्वसभ्यं व्याकरणम् इति न्यायः।

काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्। व्याकरणं सर्वासु सभासु प्रमाणत्वेन गृह्यते शब्दसाधुत्वे।

५९ शतान्धकूपप्रवेशन्यायः।

अन्धेनैव नीयमाना अन्धा यदा भवन्ति, तदा तेषाम् अग्रगस्य या गतिः सा सर्वेषां भविष्यति। यदि अग्रगः कूपे प्रविशति, तर्हि तदनुयायिनः शतमप्यन्धाः कूपे प्रवेक्ष्यन्ति। तथा शिवं कश्चिदाचार्यः अनीश्वरम् उक्तवांश्चेत्, तदनुयायिनः सर्वे तथा वदन्तीति भावः।

६० मधुमक्षिकान्यायः।

मधु भक्षयितुं तत्र पादान् न्यस्यन्ती मक्षिका तत्रैव लग्ना आत्मानं विमोचयितुं न शक्नोति। तथा विषयेषु मग्नं मनोऽपीति भावः।

६१ अग्निशलभन्यायः।

शलभोऽग्निशिखां प्रति वेगेन गच्छति, तां शमयितुमिव। अग्निना शलभस्यैव पक्षौ दग्धौ भवतः शलभश्च ततो म्रियते। इत्थं भगवन्तम् आवरीतुम् आगता माया, तस्य तेजसा स्वयं विनश्यतीति भावः।

६२ श्वपुच्छन्यायः। (श्वपुच्छोन्नमनन्यायः)

श्वपुच्छं सदा वक्रम्। केनचित् कदाचित् ऋजूकृतम् अपि पुनस्तद् वक्रं भवत्येव। भक्त्या मम मनो भगवति क्षणं लग्नं भवति, पुनस्तु तद्वक्रम् एव। सर्वशक्त एव तदवक्रं कर्तुम् ईष्टे। तथा कुरु इति भगवन्तं प्रार्थयते कविः।

६३ शते पञ्चाशन्न्यायः।

व्यापकशतसंख्यायां व्याप्यपञ्चाशत्संख्या निविष्टा। सहस्रं व्यापकं, द्वे त्रीणि इति व्याप्यानि। सहस्रनामसु द्वित्राणि मया स्मर्यन्त इति भावः।

६४ हस्तिमशकन्यायः।

हस्ती महाकायः, मशकोऽल्पिष्ठकायः। अनयोः साम्यं कदापि न भवति। एवं शिवो महादेवः, अन्ये अल्पिष्ठा देवाः। शिवेन तेषां कथं साम्यम् ? इति भावः।

६५ गोपुच्छन्यायः।

गोः पुच्छं सूक्ष्मं सूक्ष्मतरं सूक्ष्मतमं च दृश्यते। (ऊर्ध्वतः अधो यदि निरीक्ष्यते।) तथा मम बुद्धिरपि। अन्ततः सा अचलास्तु त्वयीति प्रार्थना।

६६ मानाधीना मेयसिद्धिरिति न्यायः।

मानं प्रमाणं, मेयं प्रमेयम्। प्रमाणं विना प्रमेयं ज्ञातुं न कश्चित् शक्नोति। शिवः प्रमाणं, जगत्प्रमेयम्। शिवस्य अनुग्रहं विना जगद् ज्ञातुम् अशक्यम् इति भावः।

६७ घटसर्पन्यायः।

घटे गृहीतः सर्पः सुखेन संहर्तुं शक्यः। स यदि बहिर्निर्गच्छति, दुःसंहरो भविष्यति। तथा मयि स्थितम् अरिषड्वर्गम् अन्तरेव संहर। अन्यथा तस्य नाशनं दुष्करं भविष्यतीति भक्तो भगवन्तं वदति।

६८ चन्द्रिकाचन्द्रकान्तन्यायः।

चन्द्रिकायां प्रसृतायां कठिनोऽपि चन्द्रकान्तः स्वयं द्रवति। तथा कठिनं मे चित्तं तव कटाक्षो द्रवीकरोतु इति भक्तो भगवन्तं याचते।

६९ स्पर्शवेदिन्यायः। (स्पर्शमणिन्यायः ?)

स्पर्शाख्यो मणिः स्वस्पर्शविषयं सर्वं लोहमपि सुवर्णं करोति। तथा ईशकटाक्षविषयः सर्वः मुक्तो भविष्यति।

७० मणिगुणन्यायः।

मणयो रत्नानि। गुणः सूत्रम्। सूत्रमाभरणत्वेन न धारयन्ति जनाः। किन्तु यदा सूत्रं मणिषु अनुस्यूतं भवति, तदा तदपि धारयन्ति।

परम्परया तदपि आभरणं भवति। तथा भक्तस्य ज्ञानं भगवतो यदा अनुस्यूततया भवति, तदा स बोधः भगवत आभरणायते।

७१ सूचितन्तुन्यायः।

तन्तुः स्वयं वस्त्रे प्रवेशं कर्तुं न शक्नोति। सूचीरन्ध्रे यदा सूत्रं प्रोतं भवति, तदा यत्र यत्र सूची गच्छति, तत्र तन्तुरपि गच्छति। तथा भगवति प्रोता भक्तचित्तवृत्तिः जगति सर्वत्र शक्ता भवति।

७२ शाल्मलीफलन्यायः।

शाल्मलीफलं बहिस्सुन्दरं, किन्तु तस्य अन्तस्सारं नास्ति। तथा भगवद्रसशून्यं शास्त्रं बहिस्सुन्दरमपि अन्तस्सारशून्यत्वात् असदेव इति तात्पर्यम्।

७३ कराञ्जनन्यायः।

अञ्जनं लोचनयोरर्प्यमाणं सौन्दर्यं वर्धयति, दृष्टिं च सूक्ष्मग्राहिणीं करोति। यदि तदेवाञ्जनं करे अर्प्यते, तर्हि न भूषणायते, न च किञ्चित् प्रयोजनं जनयति। तत्र दृष्टेरेवाभावात्। तथा भक्तिहीनस्य नरस्य भाग्यं निरर्थकं भवति।

७४ अजागलस्तनन्यायः।

अजागलस्तनो निष्प्रयोजनो, तत्र क्षीरोत्पत्त्यभावात। तथा भगवज्ज्ञान-हीनस्य धर्मार्थौ निरर्थको, मोक्षादायकत्वादिति भावः।

७५ जललिपिन्यायः।

जले अङ्गुल्या लिखिता लिपिः क्षणमात्रे विनश्यति। तथा देवतान्तरानुग्रहोऽपि क्षणमात्रस्थायी। शिवानुग्रहस्तु शिलालिखितलिपिवत् शाश्वत इति तात्पर्यम्।

७५a शिलाक्षरन्यायः

शिलायाम् उत्कीर्णानि अक्षराणि शाश्वतानि। भगवदनुग्रहोऽपि तथा शाश्वत इति भावः।

७६ शुक्तिरजतन्यायः।

आतपे शुक्तिर्दीप्यमाना रजतभ्रान्तिं जनयति। यदा हस्तेन गृह्यते

तदा नैतद्रजतमपि तु शुक्तिः इति ज्ञानमुत्पद्यते। विषयेषु सुखभ्रान्त्या प्रवृत्तः ज्ञास्यति, एतानि असुखानीति। वृथा मे मनः किं तेषु भ्रमयसि ? इति पृच्छति भगवन्तं भक्तः।

७७ रज्जुसर्पन्यायः।

अज्ञानकारणाद्रज्जोः सर्पात्मना भानं भवति। तदा भयं च जायते। अन्यः कश्चन तत्रागत्य "नायं सर्पः, अपि तु रज्जुः" इति भ्रान्तिं यदा निवारयति, तदा भयं नश्यति। तथा आत्मा "अहं स्थूलः, अहं सुखी अहं दुःखी इत्यादिभिः असत्यैः धर्मैः आत्मन्यारोपितैः व्याकुलो भवति "तत्त्वमसि" इति तत्त्वं यदा भगवता कथ्यते,तदा अहंताभ्रान्तिर्नश्यति। तन्मूलः संसारश्च विनश्यति।

७८ प्रकृतिविकृतिन्यायः।

विकृतिः प्रकृतेर्जायते, प्रकृतौ च लीयते। प्रकृतिः शाश्वती। भगवतो विकृतिरात्मा। कविः प्रकृतिरूपं मे भव त्वमिति आशास्ते।

७९ सामान्यन्यायः।

परमात्मा ज्ञेय इति विधिः। स सदा अज्ञेय इति निषेधः। सर्वं ज्ञेयं प्रमेयम् इति न्यायात् तत्र विधिः भवतु। परमात्मा मम ज्ञान-विषयो भवतु इति कवेः प्रार्थना।

८० नारिकेलफलजलन्यायः।

नारिकेलफले मधुरं जलं कथं प्रविष्टमिति न ज्ञायते। तदद्भुतम्। तथा मम मनःकरण्डे ज्ञानरसं पूरयेति भक्तस्य भगवन्तं प्रति याचना।

८१ जलचन्द्रन्यायः।

चन्द्र एक एव जलरूपम उपाधिम आश्रित्य अनेक इव भासते। तथा गौरीपतिरपि मायारूपम उपाधिं प्राप्य अनेकै रूपैर्भासते। वस्तुतः स एक एव।

८२ काशावलम्बनन्यायः।

जले मज्जन् पुरुषो यद्यल्लभते, तदेवावलम्बते। काशः सर्वथा अलिप्सुः,

तथापि तमपि आत्मरक्षायै अवलम्बते सः। तथा अल्पम् अपि अवकाशं दास्यसि चेत्, तम् अवलम्ब्य त्वत्समीपम् आगन्तुं यतिष्ये इति भक्तोक्तिः।

८३ विभग्नवीवधन्यायः।

वीवधो युगकाष्ठं, यदालम्बनेन भारं वहन्ति पुरुषाः। वीवधे भग्ने तदालम्बितो भारः स्वयं निवर्तते, वैवधिकस्य दुःखं चापगच्छति। जन्म वीवधसदृशं, मृत्युस्तदाश्रितभारसदृशः। जन्मनि भग्ने तदाश्रितो मृत्युः स्वयं नश्यतीति भावः।

८४ हस्तामलकन्यायः।

हस्तस्थितमामलकं स्पष्टं द्रष्टुं शक्यते। तथा भगवन्तं ज्ञानी स्पष्टं साक्षात्करोतीति भावः।

८५ दग्धपटन्यायः।

दग्धः पटो भस्मीभवति। ततः पट इति शब्दमात्रं शिष्यते। तथा मम पापराशिः दग्धः शब्दशेषो भवतु इति।

८६ शिवेच्छा बलवतीति न्यायः।

शिवस्येच्छा बलवतीति सर्वेऽप्यास्तिका वदन्ति। शिवे इच्छा शिवेच्छा। सा बलवती। अत एव मे मनः शिवासक्तं नान्यत किञ्चिदिच्छति।

८७ तुष्यतु दुर्जन इति न्यायः।

दुर्जनेदोषेषु सत्स्वपि तं निन्दितुं सदा न शक्यते। कदाचित् तस्य दोषान् विस्मृत्य "तुष्यतु" इति सज्जना मौनम् आश्रयन्ति। तथा मां (भक्तं) मूर्खं पापिनम् अज्ञं च ज्ञात्वापि मे सुखं देहीति प्रार्थयते।

८८ जलबुद्बुदन्यायः।

जले बुद्बुदाः जायन्ते, क्षणं तिष्ठन्ति, ततो नश्यन्ति। तथैव जन्म (जीवितं) क्षणभङ्गुरम्। अत एव सकलस्यापि मरणाद् भीतिः।

८९ ऐन्द्रजालिकन्यायः।

ऐन्द्रजालिकः पिञ्छं वीजयन् बहुधा मायां प्रसारयति, जनानां विस्मयं च जनयति। स्वयं सत्यं जानन् विस्मितो न भवति। तथा भगवान् मायया जगत् सृजति, नाशयति च।

९० कपिञ्जलाधिकरणन्यायः।

"कपिञ्जलान् आलभेत" इति श्रुतौ बहुत्वं त्रित्वे पर्यवस्यति इति पूर्वमीमांसाशास्त्रे निर्णीतम्। तथा शिवे गुणाः सन्तीति गुणगत-बहुत्वं त्रित्वे पर्यवस्यति। शिवे हि सत्त्वरजस्तमोरूपास्त्रय एव गुणाः सन्ति वस्तुतः।

९१ विषपृक्तमधुन्यायः।

मधु मधुरम्। सर्वस्तल्लेढुम् इच्छति। किन्तु तन्मधु यदि विषसम्पृक्तं, तर्हि न कश्चिदिच्छति, मरणहेतुत्वात्। तथा वैषयिकं सुखं दोषानुविद्धत्वात् त्याज्यम् इत्यभिप्रायः।

९२ अटवीचन्द्रिकान्यायः।

अटव्यां चन्द्रिका प्रसृतापि व्यर्था। तत्र हि चन्द्रिकानुभवेन सन्तोषं प्राप्तुं शक्ता जना एव न भवन्ति। भगवत्कटाक्षोऽपि भक्ते प्रसारित एव फलदः, अभक्तेषु स व्यर्थो भविष्यतीति कवेर्भाव।

९३ अयस्कान्तलोहन्यायः। (लोहचुम्बकन्यायः)

अयस्कान्तं लोहमाकर्षति। तथा भगवान् भक्तानां मन आकर्षति।

९४ नेत्ररजोन्यायः।

नेत्रं लोकं द्रष्टुं शक्तम्। किन्तु नेत्रे यदि रजः पतति, तर्हि नेत्रं किमपि द्रष्टुं न शक्नोति। रजो यदा अपसार्यते, तदा नेत्रस्य दर्शनशक्तिः पुनः संजायते। पापरूपं रजो मम नेत्रे पतितं, तदपसार्य मे दृष्टिं निर्मलां कुरु, ततोऽहं त्वां द्रष्टुं शक्ष्यामि इति भावः।

९५ अक्षिपक्ष्मन्यायः।

अक्ष्णोः पक्ष्मणी अप्रचोदिते अपि रक्षां कुरुतः। तयोः स्वभाव एव

ताहशः। तथा मया अप्रार्थितोऽपि मे रक्षां कुरु इति भगवन्तं प्रार्थयते कविः।

९६ भिक्षुपादप्रसारन्यायः।

भिक्षुर्गृहसमीपमागतः प्रथमं पादमात्रं निधातुं स्थलं याचते। तावति स्थले लब्धे क्रमेण सर्वं गृहम् आक्रामति। तथा त्वंपदार्थात् तत्पदार्थैक्य-याचनेति भावः।

९७ गोबलीवर्दन्यायः

बलीवर्दस्य गोविशेषत्वेऽपि बलीवर्दस्य झटिति गोत्वेन बोधनार्थं यथा प्रयोगस्तथा अन्ययोः सामान्यविशेषरूपयोः झटिति बोधनार्थं यत्र प्रयोगस्तत्रास्य न्यायस्य प्रवृत्तिः। परमात्मापि आत्मैव। तथापि आत्मपरमात्मानाविति अनेन न्यायेन प्रयुज्यते। मम मोक्षप्रदानेन ताहशपरमात्मशब्दवाच्यं त्वदभिन्नं कुरु इति प्रार्थयते कविः।

९८ कण्ठचामीकरन्यायः।

कस्यचित्कण्ठ एव चामीकराभरणं वर्तते। स तदनवगच्छन् सुवर्णा-भरणाय उत्कण्ठते। यदा कश्चित विद्वान् "तव कण्ठे विद्यमानं वस्त्वेव चामीकराभरणम्" इति ज्ञापयति, तदा प्राप्तस्यैव प्राप्तिः। तत एव हर्षः। तथा ब्रह्मैव सन ब्रह्माप्नोति ज्ञानी अद्वैततत्त्वानुसारेण।

९९ क्षीरोदकन्यायः। (क्षीरनीरन्यायः)

क्षीरोदकयोः मिश्रणे कृते सर्वं क्षीरमेव भवति। कस्मिन्नवकाशे क्षीरं, कस्मिन्नीरमिति विवेक्तुं न शक्यते। तथा मयि त्वयि विलीने मम पृथगस्तितैव नास्ति। तथा कुरुष्वेति परमात्मानं प्रति भक्तस्य प्रार्थना॥

## न्यायशतकस्थानां न्यायानाम् अकाराद्यनुक्रमणी

# न्यायशतकस्थश्लोकानाम् अकाराद्यनुक्रमणी

WO 5393—MUPM—1000 copies—28-7-98